C. 1. 3441
B. 1. 83. 18
K. 1. 77. 34

दृष्ट्वा तु तेषां बालानां प्रणयं पार्थिवं प्रति ।
बुद्ध्वा च तत्त्वतो देवी शर्मिष्ठामिदमब्रवीत् ॥ १७
मदधीना सती कस्मादकार्षीर्विप्रियं मम ।
तमेवासुरधर्मं त्वमास्थिता न बिभेषि किम् ॥ १८

शर्मिष्ठोवाच ।

यदुक्तमृषिरित्येव तत्सत्यं चारुहासिनि ।
न्यायतो धर्मतश्चैव चरन्ती न बिभेमि ते ॥ १९
यदा त्वया वृतो राजा वृत एव तदा मया ।
सखीभर्ता हि धर्मेण भर्ता भवति शोभने ॥ २०
पूज्यासि मम मान्या च ज्येष्ठा श्रेष्ठा च ब्राह्मणी ।
त्वत्तोऽपि मे पूज्यतमो राजर्षिः किं न वेत्थ तत् ॥ २१

वैशंपायन उवाच ।

श्रुत्वा तस्यास्ततो वाक्यं देवयान्यब्रवीदिदम् ।
राजन्नाद्येह वत्स्यामि विप्रियं मे कृतं त्वया ॥ २२
सहसोत्पतितां श्यामां दृष्ट्वा तां साश्रुलोचनाम् ।
त्वरितं सकाशं काव्यस्य प्रस्थितां व्यथितस्तदा ॥ २३

---

Dn ins. the first line of 818*. — After 16, $D_4$ S ($T_2$ G for the first time) read $25^{ab}$; then ins.:

817* नातिदूराच्च राजानमवातिष्ठदवाङ्मुखी ।

[ $D_4$ M °जानं शर्मिष्ठा समतिष्ठत; $G_6$ °नमतितिष्ठ°. ]

17 Ś$_1$ missing. — $^a$) K (except $K_2$) च (for तु). — $^c$) $G_5$ दृष्ट्वा; $G_6$ लब्ध्वा. $B_5$ S (except $M_{6-8}$) तु (for च). Dn $D_4$ च तत्वं सा; $D_1$ तत्वं च सा. — After 17, S (except $M_3$) ins.:

818* श्रुत्वा तु तेषां बालानां सव्रीड इव पार्थिवः ।
प्रतिवक्तुमशक्तोऽभूत्तूष्णींभूतोऽभवन्नृपः ।
गृहीत्वा तु करे रोषाच्छर्मिष्ठां पुनरब्रवीत् ।

— $K_{0.4}$ Ñ (om. lines 1, 3) $B_5$ (om. lines 1, 3) $Dn_3$ $D_1$ (om. lines 2, 3).$_4$ $M_3$ ins. after 17: Da (om. line 3), after 18: T G $M_{5-8}$, after 818*:

819* देवयान्युवाच ।
अभ्यागच्छति मां कश्चिदृषिरित्येवमब्रवीत् ।
ययातिमेव नूनं त्वं प्रोत्साहयसि भामिनि ।
पूर्वमेव मया प्रोक्तं त्वया तु वृजिनं कृतम् ।

[ $K_{0.4}$ Ñ $B_5$ Da om. देवयान्यु°; S om. उवाच. — (L. 1) $K_{0.4}$ $Dn_3$ M अन्यो ग°. $G_3$ °पिरेत्य वचोब्र°. $Dn_3$ $T_2$ $G_{4-6}$ $M_{6-8}$ °ब्रवीः. Da $D_1$ ऋषिरभ्यागतः ($D_1$ आजगाम ऋषिः) कश्चिदिति मां पूर्वम°. — (L. 2) Ñ $B_5$ Da $Dn_3$ °व नृपतिं; $D_4$ $M_3$ °व राजानं. Ñ तं प्रोत्साहय का°; $D_2$ यमाह्वयसि भा°. ]

18 Ś$_1$ missing. Before 18, $K_3$ $D_5$ ins. देवयान्यु°. — $^a$) S मय्यधीना. Ñ$_{1.3}$ सखी. $T_1$ $G_1$ कन्या. — $^b$) $T_2$ $G_{2-6}$ M transp. विप्रियं and मम. $K_2$ $D_5$ अप्रियं. $K_2$ वद (*sup. lin.* मम as in text). $T_1$ $G_1$ यदकार्षीन्म($G_1$ °र्मं)माप्रियं. — $^c$) T G (except $G_3$) तद् (for तम्). $B_4$ $Da_1$ $D_{1.5}$ °धर्मत्वं; $T_2$ G (except $G_3$) °कर्मं ($G_{1.2}$ °र्मं) त्वं. $M_{3.5}$ तु (for त्वम्). — $^d$) S चरंती (for आस्थिता). $M_{6-8}$ बिभैपि. Ñ B D मे; S मां (for किम्). — After 18, Da ins. 819*.

19 Ś$_1$ missing. $K_1$ S om. उवाच. — $^b$) $T_1$ शर्मिष्ठा (for तत्सत्यं). $M_5$ चारुलोचने. $M_3$ प्रोक्तं सत्यं शुचिस्मिते.

20 Ś$_1$ resumes with भर्ता हि in$^c$ (cf. v. l. 1. 72. 23). — $^a$) $T_2$ $G_3$ यथा. $Dn_3$ S वृतस्त्व($Dn_3$ °तो त्व)या (by transp.). $K_1$ Ñ$_{2.3}$ B D भर्ता (for राजा). — $^b$) $K_4$ transp. तदा and मया. S तदै($T_1$ $G_3$ °थै; $G_{1.2.5}$ °दे)व स ($T_2$ $G_{2.4-6}$ हि) मया वृतः. — $^c$) Ś$_1$ $K_1$ स-; $K_2$ च (for हि).

21 Ś$_1$ partly damaged. — $^a$) $K_2$ हि; $D_2$ S च (for असि). — $^b$) $G_2$ साध्वी (for श्रे°). $K_1$ $Da_1$ $T_1$ भामिनी ($K_1$ °नि; $T_1$ *sup. lin.* as in text); Ñ$_{1.2}$ B $Da_2$ $D_1$ भाविनि ($D_1$ °नी); $D_2$ भार्गवी. — $^c$) $K_2$ $D_5$ $T_1$ G हि (for ऽपि). $K_2$ S (except $G_3$ $M_{3.5.8}$) पूज्यतरो; Ñ$_3$ पूर्वतमो. — $^d$) $B_3$ $M_{3.8}$ नु (for न). $K_{2-4}$ $Da_1$ वेत्सि. $G_{2.4.5}$ किं न भामिनी. $K_{0.1}$ $M_3$ तं (for तत्). Ś$_1$ °र्षिर्वेत्थ किं न तं. — After 21, $D_4$ S ins.:

820* तव पित्रा मे गुरुणा सहदत्ते उभे शुभे ।
ततो भर्ता च पूज्यश्च पोष्यां पोषयतीह माम् ।

[ (L. 1) $D_4$ $M_5$ त्वत्पित्रा मम गुरुणा ($M_5$ गुरुणा मे च). — (L. 2) $T_2$ $G_6$ तव भ°. $T_1$ $G_{2.4.5}$ हि भर्ता (for भर्ता च). $G_{1.3}$ हि पूज्यो भर्ता च (for भर्ता च पू°). ]

22 Ś$_1$ $K_{0.1.3}$ $D_{2.5}$ S om. उवाच. — Ś$_1$ partly damaged. — $^a$) $D_5$ श्रुत्वा तु तस्यास्तद्; S (except $T_1$ $G_3$) एवं (M एतत्) श्रुत्वा ततो. — After $21^{ab}$, $D_4$ ins. 821*. — $^d$) Ñ$_3$ $D_2$ $M_{3.5}$ transp. कृतं and त्वया. — S ins. after 22: $D_4$, after $22^{ab}$:

821* रमस्वेह यथाकामं देव्या शर्मिष्ठया सह ।
प्रतिजज्वाल कोपेन देवयानी तदा भृशम् ।
निर्दहन्तीव सव्रीडां शर्मिष्ठां समुदीक्ष्य च ।
अपविध्य च सर्वाणि भूषणान्यसितेक्षणा ।

[ (L. 3) $G_{2.4-6}$ देवयानी च (for निर्द°). ]

अनुवव्राज संभ्रान्तः पृष्ठतः सान्त्वयन्नृपः ।
न्यवर्तत न चैव स्म क्रोधसंरक्तलोचना ॥ २४
अविब्रुवन्ती किंचित्तु राजानं चारुलोचना ।
अचिरादिव संप्राप्ता काव्यस्योशनसोऽन्तिकम् ॥ २५
सा तु दृष्ट्वैव पितरमभिवाद्याग्रतः स्थिता ।
अनन्तरं ययातिस्तु पूजयामास भार्गवम् ॥ २६
देवयान्युवाच ।
अधर्मेण जितो धर्मः प्रवृत्तमधरोत्तरम् ।
शर्मिष्ठयातिवृत्तास्मि दुहित्रा वृषपर्वणः ॥ २७
त्रयोऽस्यां जनिताः पुत्रा राज्ञानेन ययातिना ।
दुर्भगाया मम द्वौ तु पुत्रौ तात ब्रवीमि ते ॥ २८
धर्मज्ञ इति विख्यात एष राजा भृगूद्वह ।
अतिक्रान्तश्च मर्यादां काव्यैतत्कथयामि ते ॥ २९
शुक्र उवाच ।
धर्मज्ञः सन्महाराज योऽधर्ममकृथाः प्रियम् ।
तस्माज्जरा त्वामचिराद्धर्षयिष्यति दुर्जया ॥ ३०
ययातिरुवाच ।
ऋतुं वै याचमानाया भगवन्नान्यचेतसा ।
दुहितुर्दानवेन्द्रस्य धर्म्यमेतत्कृतं मया ॥ ३१
ऋतुं वै याचमानाया न ददाति पुमान्वृतः ।
भ्रूणहेत्युच्यते ब्रह्मन्स इह ब्रह्मवादिभिः ॥ ३२
अभिकामां स्त्रियं यस्तु गम्यां रहसि याचितः ।
नोपैति स च धर्मेषु भ्रूणहेत्युच्यते बुधैः ॥ ३३
इत्येतानि समीक्ष्याहं कारणानि भृगूद्वह । C. 1. 3458 B. 1. 83. 35 K. 1. 77. 57

---

23 M6–8 om. $23^{ab}$. Ś1 partly damaged. — a) T G (except G1.3) °तां राजा; M3 °तं नागं; M5 °तं सर्वं. — b) B1.6 D2 ताम्रलो°. T G (except G1.3) M3.5 दृष्ट्वैव सहसोत्थितः. — c) Hypermetric! Ko.1 शीघ्रं; K3.4 Ñ3 B3–5 Da2 त्वरितां; Ñ2 द्रुतं; Da1 M त्वरिता; T2 G4–6 त्वरया. K2 पितुः सकाशं त्वरितं; G2 त्वरया काव्यसंकाशं. — d) G1 सदृशां (for व्यथितस्). Dn3 T1 G3 °थितां तदा (G3 °था); T2 G2.4–6 °थिताननां. M प्रस्थिता कमलेक्षणा (M3.5 °लानना).

24 Ś1 partly damaged. — c) T1 G1.6 न ह्या(G6 प्रा)वर्तत; T2 G2–5 M न न्यवर्तत (by transp.). T1 G2.4.5 M वै तस्मात् (M3 *inf. lin.* कोपात्); T2 G6 चैवं सा; G1.3 चैवास्मिन् (G3 °थ).

25 D4 S read $25^{ab}$ after 16 (T2 G repeat $25^{ab}$ here; cf. v. l. 16). B5 Da2 (hapl.) om. $25^{ab}$. — a) T1 तमब्रु°; M6–8 अपि ब्रु°. Ñ1.2 Da1 Dn सा; Ñ3 S च (for तु). — b) Ko.3.4 D1 °हासिनी; Ñ2 B1.3.4 D2 वामलो°; Da1 Dn D4 साश्रुलो°; T2 G (except G1) °दर्शना. — c) Ko.3.4 Ñ B3.6 D (except D5) °रादेव; B5 °रेणेव.

26 b) S (except T1 G1.3) अभिवाद्येदमब्रवीत्. — c) Ñ3 B4–6 Da D2 T G च (for तु).

27 Ś1 K1 D5 S om. उवाच. — c) Ñ1 D4.5 °या निवृत्ता°; G3 °या यदुक्ता°.

28 b) K4 G (except G1.3) °ज्ञा तेन. — c) Ś1 K Ñ3 D5 °गायां (K4 Ñ3 °या) मयि. — d) M3.5 जनितौ पुत्रकौ नृपात्; M6–8 पुत्रावजनयन्नृपः.

29 a) T2 G (except G1.3) धर्मिष्ठ इ°; M5 सधर्म इ°. — b) K2 कुलो°; D4 G6 कुरूद्वहः.

30 S om. उवाच; K1 G5 om. शुक्र उ°. — a) T1 G (except G6) धार्मिकः. Ś1 M5 च; G1 त्वं (for सन्). — b) S यो धर्मं ना(G1 चा; G2.3 न)कृथाः. Ko.3.4 Ñ3 B4.5 Da1 D2 S स्वयं. — c) K2 Ñ3 T G (except G4) M3 नचिराद्.

31 Ś1 K1 S om. उवाच (G5 om. the ref.). Ś1 K1 (hapl.) om. 31. — d) Some MSS. धर्मम्.

32 a) Ko.3 Ñ3 D5 यो (for वै). — b) K2 Ñ3 B D (except D5) ऋतुं (for वृतः). — d) S सदा (T1 G1.3 तथा) वै (for स इह).

33 a) B5 D2 अतिकामां; T1 अभिगम्यां. Ko.3.4 B D (except D2.5) °यं यश्च; S °यं चैव (T1 यो वै). — c) S उपैति यः स्व- (T1 G1.2 च स; G3–5 M3.5 यः स). Ko.3.4 B D2.5 M (except M5) धर्मेण. — d) S किल्बिषी न च सः (T1 G1.2 यः; M7 सत्-) पुमान्. — After 33, D4 (om. line 3) S (except T2) ins.:

822* यद्यद्याचति मां कश्चित्तत्तद्देयमिति व्रतम् ।
त्वयापि सा च दत्ता मे नान्यं नाथमिहेच्छति ।
सत्वैतन्मम धर्मं तु कृतं ब्रह्मन्क्षमस्व माम् ।

[ (L. 1) D4 वृणोति (for याचति). G2.4.5m °ति कामं च. T1 G1.3 M6–8 तद्ददामीति मे व्र°. — (L. 3) M3.6–8 °तदिह. T1 G1–3.5.6 M5 धर्मेति. ]

34 d) Ś1 Da D5 °ष्टामभि-.

C. 1. 3458
B. 1. 83. 35
K. 1. 77. 57

अधर्मभयसंविग्नः शर्मिष्ठामुपजग्मिवान् ॥ ३४

शुक्र उवाच ।

नन्वहं प्रत्यवेक्ष्यस्ते मदधीनोऽसि पार्थिव ।
मिथ्याचारस्य धर्मेषु चौर्यं भवति नाहुष ॥ ३५

वैशंपायन उवाच ।

क्रुद्धेनोशनसा शप्तो ययातिर्नाहुषस्तदा ।
पूर्वं वयः परित्यज्य जरां सद्योऽन्वपद्यत ॥ ३६

ययातिरुवाच ।

अतृप्तो यौवनस्याहं देवयान्यां भृगूद्वह ।
प्रसादं कुरु मे ब्रह्मञ्जरेयं मा विशेत माम् ॥ ३७

शुक्र उवाच ।

नाहं मृषा ब्रवीम्येतज्जरां प्राप्तोऽसि भूमिप ।
जरां त्वेतां त्वमन्यस्मै संक्रामय यदीच्छसि ॥ ३८

ययातिरुवाच ।

राज्यभाक्स भवेद्ब्रह्मन्पुण्यभाक्कीर्तिभाक्तथा ।
यो मे दद्याद्वयः पुत्रस्तद्भवाननुमन्यताम् ॥ ३९

शुक्र उवाच ।

संक्रामयिष्यसि जरां यथेष्टं नहुषात्मज ।
मामनुध्याय भावेन न च पापमवाप्स्यसि ॥ ४०
वयो दास्यति ते पुत्रो यः स राजा भविष्यति ।
आयुष्मान्कीर्तिमांश्चैव बह्वपत्यस्तथैव च ॥ ४१

इति श्रीमहाभारते आदिपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

35 Ś1 K1 S om. उवाच. — In Ś1 the first five letters are lost on a missing portion. — a) K3.4 D4 G (except G1.3) न त्वहं; Da1 न त्वत्वं (sic); T1 तत्वहं. Ś1 °वीक्ष्यस्ते; M प्रतिवक्ष्य(M3.5 °वाच्य)स्ते. — b) Ñ3 S मय्यधी°. — c) M3.5 °थ्या चरसि. — d) S जरा (for चौर्यं).

36 Ś1 K1.3 D5 S om. उवाच (T2 G4–6 om. the ref.). — b) Ñ3 D5 G3 °तिर्नहुषात्मजः.

37 Ś1 K1 S om. उवाच. D2 lacuna for the ref. In Ś1 this st. is lost on a missing portion. — a) Ñ3 अतृप्तयौवनश्चाहं. — b) K0.4 Da1 Dn3 G3 M3.5 देवयान्या. — c) Ñ3 °रु ब्रह्मर्षे. — d) G3 न शापः (for जरे°). K0.1.3.4 B3 नाविशेत (B3 °च्च); Ñ B1.4–6 D (except D2.5) T1 G1.2 न विशेत (Ñ1 Dn D1.4 °च्च); G3 प्रवि°. K2 °यं नाविशेद्यथा.

38 Ś1 K1 S om. उवाच. D2 lacuna for the ref. In Ś1, the portion of the text from 38 up to 1. 79. 7a is lost on the missing upper half of a fol. (61). — a) K2 Da1 वृथा (for मृषा). K2 °म्येत्य; D4 G3–5 °म्येव; T2 G6 M3.5 °म्येनां; G1.2 °म्येह; M6–8 प्रब्रवीमि (for ब्रवीम्येतत्). — c) K (except K1; K2 sup. lin.) एतां (K3 °नां); M इमां (for त्वेतां). K2 त्वमप्यन्यं; Ñ B3.5.6 Dn D1.4.5 त्वमन्यस्मिन्. T G (except G6) °रां त्वमेताम्°.

39 Ś1 missing (cf. v. l. 38). K1 S om. उवाच. D2 lacuna for the ref. — b) T2 G6 transp. पुण्य° and कीर्ति°. — d) M6–8 तं (for तद्).

40 Ś1 missing (cf. v. l. 38). K1 S om. उवाच. D2 lacuna for the ref. — After शुक्र उ°, K0.4 D2.5 ins.:

823* पुत्रो ज्येष्ठः कनिष्ठो वा यो ददाति वयस्तव ।
[ K4 D2 °ति भयाद्वयः ].

Thereafter D5 ins. (for the first time) 824* (cf. v. l. 1. 79. 8).

41 Ś1 missing (cf. v. l. 38). — ab) T1 G1 transp. ते and यः. G3 स च (for यः स).

Colophon. Ś1 missing. — *Major parvan:* G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 T1 संभव; to it Ñ1.2 add ययात्युपाख्यान. K1.2 B D M3.5 (om. the sub-parvan name) mention only यायात. — *Adhy. name:* K0.3.4 ययातिशापः. T2 G4 ययातिशापावाप्तिः; G1 ययातिशापमोक्षः. — *Adhy. no.* (figures, words or both): K0 80; B5 77; Da1 D4 m 81; Dn3 82; T1 68; T2 18; G M 19. — *S'loka no.:* Ñ3 Da1 43; Dn 42; M3 62. — *Aggregate s'loka no.:* Dn2 3437.

## 79

☞ This adhy. is missing in V1 (cf. v. l. 1. 68.-74); the MS. is *wholly* ignored here.

1 In Ś1, 1–9a is missing (cf. v. l. 1. 78. 38). K0.1 D5 S om. उवाच. — b) Ñ2 B1 D (except D2.5) S (except M6–8) हि (for ह). — c) K3 ज्येष्ठं पुत्रं (by transp.). T1 G1–3 परिष्वज्य (for वरिष्ठं च).

# ७९

वैशंपायन उवाच ।

जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव ह ।
पुत्रं ज्येष्ठं वरिष्ठं च यदुमित्यब्रवीद्वचः ॥ १
जरा वली च मां तात पलितानि च पर्यगुः ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ॥ २
त्वं यदो प्रतिपद्यस्व पाप्मानं जरया सह ।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥ ३
पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा स्वं प्रतिपत्स्यामि पाप्मानं जरया सह ॥ ४

यदुरुवाच ।

सितश्मश्रुशिरा दीनो जरया शिथिलीकृतः ।
वलीसंततगात्रश्च दुर्दर्शो दुर्बलः कृशः ॥ ५
अशक्तः कार्यकरणे परिभूतः स यौवनैः ।
सहोपजीविभिश्चैव तां जरां नाभिकामये ॥ ६

ययातिरुवाच ।

यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्मादराज्यभाक्तात प्रजा ते वै भविष्यति ॥ ७
तुर्वसो प्रतिपद्यस्व पाप्मानं जरया सह । C. 1. 3475 B. 1. 84. 10 K. 1. 78. 10

---

2 Ś$_1$ missing (cf. v. l. 1). Before 2, K$_3$ B$_1$ D (except D$_{2.5}$) ins. ययातिरु°; G$_3$ ययातिः. — 2$^{ab}$ = (var.) 24$^{cd}$. — $^{a}$) K$_2$ D$_{1.5}$ S मे (G$_3$ मा; G$_5$ ते) (for मां). — $^{d}$) Da नैव तृ°.

3–4 Ś$_1$ missing (cf. v. l. 1). K$_1$ G$_2$ om. 3$^{c}$–4$^{d}$. D$_1$ transp. 3$^{cd}$ and 4$^{ab}$. Cf. 8–9, 16, 20 and 26. — 4$^{a}$) Ñ$_3$ पूर्णे सहस्रे वर्षाणां. — $^{b}$) K$_2$ Ñ$_{1.2}$ D$_2$ पुनर्दास्यामि यौवनं. — $^{c}$) K$_{0.3}$ B$_{5.6}$ Da$_1$ Dn$_1$ D$_2$ T$_1$ सं- (for स्वं). M °पत्स्येहं.

5 Ś$_1$ missing (cf. v. l. 1). K$_1$ S om. उवाच. — After यदुरु°, K$_3$ (om. line 2).$_4$ Ñ B D ins. (D$_5$ repeats; cf. v. l. 1. 78. 40):

824* जरायां बहवो दोषाः पानभोजनकारिताः ।
तस्मान्न ग्रहीष्ये राजन्निति मे रोचते मनः ।

[ (L. 1) K$_3$ °वर्जनाः; K$_4$ Ñ$_1$ °वार्जिताः; D$_5$ °वर्धनाः. — (L. 2) Ñ$_1$ B$_1$ Dn D$_{4.5}$ तस्माज्जरां न ते (D$_4$ नाद्य) राजन् (B$_1$ D$_5$ °रां न ग्रहीष्ये); Ñ$_3$ तां न ग्रहीष्ये राजेंद्र; B$_5$ तस्माद्ग्रहीष्ये न जरां (m as in B$_1$ D$_5$); D$_1$ तस्मान्न च रोचते राजन्; D$_2$ ततो न गृह्णामि वै राजन्. K$_4$ जरां (for राजन्). Dn D$_{1.4}$ ग्रहीष्य इति मे मतिः (D$_{1.4}$ °नः). K$_4$ निश्चिता मतिः (for रोचते मनः). ]

— $^{a}$) K$_{0.1}$ °श्रुः शि(K$_1$ सि)रा लीनो; K$_{2.4}$ D$_5$ °शिरा लीनो; K$_3$ T$_1$ G$_{1.2}$ °श्रुजरादी(K$_3$ °ली)नो; Ñ$_{1.2}$ B$_{1.3–5}$ °श्रुधरो (B$_3$m °शिरा as in text) दीनो; Dn D$_{1.4}$ °श्रुर्निरानंदो. — $^{b}$) T$_1$ G$_3$ शिथिलाकृतिः. — $^{c}$) K (except K$_0$) D$_5$ G$_{1.3}$ °संनत°; Ñ$_1$ °संपन्न°; Ñ$_2$ Da Dn D$_{1.4}$ °संगत°; T$_1$ °संतान°; G$_2$ M$_5$ पलिसंतत°. Ñ$_{1.2}$ B$_3$ D (except D$_2$) तु (for च). — $^{d}$) Da$_1$ D$_1$ G$_{4.5}$ M$_{5.8}$ दुर्दशो. K$_0$ Dn$_3$ T$_2$ G (except G$_3$) कृतः.

6 Ś$_1$ missing (cf. v. l. 1). — $^{a}$) Ñ$_3$ कामकरणे. — $^{b}$) D$_4$ S च (D$_4$ G$_3$ स्व-; G$_1$ सु-; M$_3$ *inf. lin.* स as in text). K$_4$ D$_5$ यौवने; Ñ B$_6$ Dn$_2$ D$_4$ °तैः. — $^{c}$) Ñ$_3$ तात (for चैव). — After 6$^{c}$, G$_{1.2}$ ins.:

825* भार्यापुत्रसुहृज्जनैः ।
सुरूपनाशिनीं घोरां.

— $^{d}$) K तज्जरां. S नैव का°. Ñ$_3$ तज्जराहं न का°. — After 6, K$_{3.4}$ D ins.:

826* सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप ।
जरां ग्रहीतुं धर्मज्ञ तस्मादन्यं वृणीष्व वै ।

7 Ś$_1$ missing (cf. v. l. 1). K$_{1.3}$ S om. उवाच. Da lacuna for the ref. Cf. 11, 18 and 22. — $^{a}$) K$_{0.4}$ यस्त्वं मे; K$_1$ यन्मे त्वं; S यो मे त्वं. Ś$_1$ resumes with 7$^{b}$ (cf. v. l. 1. 78. 38). — $^{b}$) T$_1$ G$_{1.3}$ यौवनं (for वयः स्वं). — $^{c}$) B D$_2$ °स्मान्न रा°. T$_1$ °भुक् (for °भाक्). — $^{d}$) Ś$_1$ missing. K$_2$ Ñ$_{1.3}$ D$_5$ S वै ते (by transp.); Ñ$_2$ Da Dn D$_{1.4}$ तव; B$_6$ चैव. — After 7, D$_4$ S ins. (with वैशं° prefixed in G$_6$ M$_{3.5}$):

827* प्रत्याख्यातस्तु राजा स तुर्वसुं प्रत्यभाषत ।
[ D$_4$ T$_1$ G$_{1.3}$ M$_{3.5}$ °सुं प्रत्युवाच ह. ]

8 Before 8, B$_{1.6}$ D$_4$ ins. ययातिरु°; G$_6$ ययातिः.

C. 1. 3475 B. 1. 84. 10 K. 1. 78. 10 यौवनेन चरेयं वै विषयांस्तव पुत्रक ॥ ८
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥ ९
तुर्वसुरुवाच ।
न कामये जरां तात कामभोगप्रणाशिनीम् ।
बलरूपान्तकरणीं बुद्धिप्राणविनाशिनीम् ॥ १०
ययातिरुवाच ।
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्मात्प्रजा समुच्छेदं तुर्वसो तव यास्यति ॥ ११
संकीर्णाचारधर्मेषु प्रतिलोमचरेषु च ।
पिशिताशिषु चान्त्येषु मूढ राजा भविष्यसि ॥ १२
गुरुदारप्रसक्तेषु तिर्यग्योनिगतेषु च ।
पशुधर्मिषु पापेषु म्लेच्छेषु प्रभविष्यसि ॥ १३
वैशंपायन उवाच ।
एवं स तुर्वसुं शप्त्वा ययातिः सुतमात्मनः ।
शर्मिष्ठायाः सुतं द्रुह्युमिदं वचनमब्रवीत् ॥ १४
द्रुह्यो त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम् ।
जरां वर्षसहस्रं मे यौवनं स्वं ददस्व च ॥ १५
पूर्णे वर्षसहस्रे तु प्रतिदास्यामि यौवनम् ।
स्वं चादास्यामि भूयोऽहं पाप्मानं जरया सह ॥ १६

---

Cf. 3 and 20. — $^{a}$) Ś$_1$ missing. A few MSS. तुर्वशो. — G$_1$ om. $8^{c}$–$9^{d}$. For $8^{cd}$, T$_1$ subst. $3^{cd}$.

9 Ś$_1$ missing up to पुनः (in $^{b}$). G$_1$ om. 9 (cf. v. l. 8). Cf. 4, 16 and 26. — $^{a}$) K$_1$ Ñ$_3$ ते (for तु). — $^{b}$) K$_1$ Ñ T$_2$ G (G$_1$ om.) M प्रति- (for पुनर्). T$_1$ पुनस्ते यौवनं त्वहं. — $^{c}$) Ñ$_3$ B D$_2$ T$_1$ दत्वा स्वं (T$_1$ सं-) प्र°.

10 K$_1$ S read तुर्वशुः (T$_1$ G$_1$ °सुः) and om. उवाच; D$_2$ has lacuna for the ref. — $^{ab}$) Ñ$_3$ न जरां कारये तात. K$_0$ B$_{1.6}$ Da$_2$ T$_1$ M$_{3.5.8}$ °प्रणाशनीं. B$_{1.5.6}$ D$_2$ नाहं (B$_6$ राजन्) जरामिमां तात (B$_6$ नाभि-) कामये भोगनाशिनीं. — $^{c}$) B$_4$ °भोगांत°; G$_{1.4}$ M$_{6-8}$ °करिणीं. — $^{d}$) Ñ$_{1.2}$ B$_3$ D (except D$_{1.2.5}$) G$_3$ °प्रणाशि(Da$_2$ °श)नीं; Ñ$_3$ B$_{1.6}$ T$_1$ M$_{3.5}$ °शनीं; G$_{2.4.5}$ अर्थं°; M$_{6-8}$ देह°.

11 Ś$_1$ K$_1$ S om. उवाच. — D$_2$ lacuna for the ref. Cf. 7, 18 and 22. — $^{a}$) Ś$_1$ K$_1$ यन्मे त्वं; K$_{0.4}$ यस्त्वं मे; S यो मे त्वं. K$_3$ औरसः पुत्रः. — $^{b}$) T$_1$ यौवनं. G$_{1-3}$ त्वं (for स्वं). — After $11^{ab}$, D$_4$ S ins.:

828* तुर्वशो त्वं प्रियं कामं नैतत्संपत्स्यते क्वचित्।
[ Cf. $18^{cd}$. — G$_{1.2.6}$ संपत्स्य(G$_1$ °द्य)से. D$_4$ M$_5$ नैव संपत्स्य(M$_5$ °द्य)ते तव. M$_{6-8}$ नैव संप्रतिपत्स्यते. ]

— After the above line, T$_1$ G$_{1.2.4.5}$ M$_{3.6-8}$ read 19, T$_2$ G$_6$ $19^{cd}$ (only). — Ś$_1$ T G om. $11^{cd}$; M (except M$_5$) om. $11^{cd}$–13. — $^{d}$) M$_5$ तव यास्यामि दुर्मते.

12 K$_2$ M (except M$_5$) om. 12 (cf. v. l. 11). — $^{a}$) T G M$_5$ संकीर्णव्यति(G$_{3.4}$ °र्णांप्रति)की(G$_3$ °ती)र्णेषु. — $^{b}$) B$_4$ °मरतेषु. — $^{c}$) Ś$_1$ K$_1$ चान्येषु; K$_4$ Dn$_3$ चांते°; B$_{1.3m.4.5}$ D$_2$ मूढे°. D$_5$ पिशितादप्रधानेषु; T G M$_5$ म्लेच्छेषु पिशिताशेषु. — $^{d}$) D$_4$ T$_2$ G$_{1.6}$ मूढो (G$_1$ क्रुद्धो) राजा; T$_1$ मूढराजो. M$_5$ निर्मर्यादेषु नित्यदा.

13 M (except M$_5$) om. 13 (cf. v. l. 11). — $^{c}$) K$_{0.4}$ Ñ B$_{1.5}$ Dn D$_{2.4.5}$ °धर्मेषु. T$_1$ G$_{1.2.4.5}$ M$_5$ पशुधर्मेष्व(G$_1$ °र्मे स्व-; M$_5$ °र्मस)धर्मेषु; T$_2$ G$_6$ छद्म(G$_6$ छिन्न)धर्मस्वरूपेषु; G$_3$ °धर्मस्वधर्मस्थो. — $^{d}$) K$_2$ Ñ$_1$ D$_5$ प्रसवि°. T G व्याधे(G$_3$ व्रात्ये)षु जनयि(T$_1$ च जनि)ष्यसि; M$_5$ मृगेषु प्रजनिष्यसे. — After 13, M$_5$ reads 19.

14 Ś$_1$ K$_{1.3}$ D$_5$ S om. उवाच (M$_{6-8}$ om. the ref.). D$_2$ lacuna for the ref. — $^{a}$) S (mostly) तुर्वशुं. — $^{b}$) B$_4$ Da D$_4$ सुमहातपाः (for सुतमा°). — $^{c}$) Ś$_1$ K (K$_1$ by corr.) G$_{1.3}$ द्रुह्यं.

15 Before 15, S$_1$ Ñ$_{1.2}$ B D (except D$_5$; D$_2$ lacuna) ins. ययातिरु°; T G (except G$_{1.3}$) M$_{3.5}$ ययातिः. — $^{a}$) Ś$_1$ K G$_3$ द्रुह्य (K$_1$ द्रुहि). — $^{b}$) K (except K$_2$) रूपवर्ण(K$_0$ बलवृत्त-; K$_3$ बलरूप)विनाश(K$_1$ °शि)नीं; B$_1$ °शनीं; S पाप्मानं जरया सह (cf. $4^{d}$, $9^{d}$, $16^{d}$, $26^{d}$). — After $15^{ab}$, S repeats $8^{cd}$, om. $15^{cd}$. — $^{c}$) B$_5$ °स्रेषु. — B$_5$ (hapl.) om. from स्वं up to the end of $16^{b}$.

16 Cf. 4, 9 and 26. — $^{ab}$) B$_5$ om. $16^{ab}$ (cf. v. l. 15). Ś$_1$ Ñ$_3$ °हस्रे ते; D$_5$ °हस्रां ते. K B$_3$ Da Dn D$_1$ पुनर्; Ñ$_2$ B$_{1.4.6}$ D$_{2.4}$ तव (for प्रति-). — $^{cd}$) S (except T$_1$ G$_{1.3}$) om. $16^{cd}$. T$_1$ G$_3$ वै (for ऽहं). K$_{0.3.4}$ स्वं वहिष्यामि भू°; K$_2$ Ñ$_3$ D$_5$ स्वं चैव (Ñ$_3$ दत्वा स्वं; D$_5$ स्वं वयः) प्रतिपत्स्यामि; Ñ$_1$ B$_{3-6}$ D$_2$ स्वं चावाप्स्यामि भू°; G$_1$ स्वयं चैव प्रवत्स्यामि.

☞ For st. 17–23, S subst. a passage which, besides containing some additional stanzas, differs from the text in so far that it om. 19 (transposed

द्रुह्युरुवाच ।

न गजं न रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियम् ।
वाग्भङ्गश्चास्य भवति तज्जरां नाभिकामये ॥ १७

ययातिरुवाच ।

यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्माद्द्रुह्यो प्रियः कामो न ते संपत्स्यते क्वचित् ॥ १८
उडुपप्लवसंतारो यत्र नित्यं भविष्यति ।
अराजा भोजशब्दं त्वं तत्रावाप्स्यसि सान्वयः ॥ १९
अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
एकं वर्षसहस्रं तु चरेयं यौवनेन ते ॥ २०

अनुरुवाच ।

जीर्णः शिशुवदादत्तेऽकालेऽन्नमशुचिर्यथा ।
न जुहोति च कालेऽग्निं तां जरां नाभिकामये ॥ २१

ययातिरुवाच ।

यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
जरादोषस्त्वयोक्तोऽयं तस्मात्त्वं प्रतिपत्स्यसे ॥ २२
प्रजाश्च यौवनप्राप्ता विनशिष्यन्त्यनो तव ।
अग्निप्रस्कन्दनपरस्त्वं चाप्येवं भविष्यसि ॥ २३ C. 1. 3491 B. 1. 84. 26 K. 1. 78. 26

---

in some S MSS. to some other part of the dialogue; cf. v. l. 19) and interchanges the rôles of Druhyu and Anu, assigning the words of Druhyu to Anu and *vice versa*. The text of the Southern passage (with its variants) is given separately, under v. l. 23 (*q. v.*). D4 includes some stray stanzas of the Southern passage inserted at various points of its own text; they have been ignored here.

17 Ś1 K1 द्रुह्युः; Ko. 2–4 द्रुह्य उ°. — a) K (except K2) transp. गजं and रथं. — c) Ś1 Ñ1. 3 B1. 4. 6 D (except D5) वाक्संग(D2 वाग्बंध)श्चास्य (B1m °पि); K2 वाक्सादश्चा°; B3 वाक्संकुंठास्य; B5 वाक्संयमश्च. — d) Ñ1. 2 D तां जरां. Ñ3 तज्जराया न कामये.

18 For S cf. v. l. 23. Ś1 K1 om. उवाच. With 18 cf. 7, 11 and 22. — a) Ko. 4 यस्त्वं मे; K1 यमेंहं (sic); B5 यत्त्वं मद्. — After 18, B (except B4) D (except D2. 5) ins.:

829* यत्राश्वरथमुख्यानामश्वानां स्याद्गतं न च ।
हस्तिनां पीठकानां च गर्दभानां तथैव च ।
बस्तानां च गवां चैव शिबिकायास्तथैव च ।

19 T1 G1. 2. 4. 5 M3. 6–8 read 19, T2 G6 $19^{cd}$ (only), after 828*; G3 om. it, and M5 reads it after 13. — a) Ś1 Ko. 1 नोडुप°; K3. 4 B5 D2 °संचारो; Ñ3 औडुप°; B3 °संभारो. K2 D5 नोडुपप्लवसंचारो; S यत्रोडुप्लवसंतारः. ❀ Dev.: उडुपं तृणकाष्ठादिघटितं । सन्तरणसाधनं [।] तेन प्लवो गमनं न संतारः पारप्राप्तिर्यत्र न तत्र (।) भविष्यसीत्यन्वयः [।] ❀ — b) S तत्र (for यत्र). — c) M न (for अ-). Dn अराजंभाज°. D2 भोगहीनस् (for भोज°). K3. 4 Ñ1. 2 B5 °शब्दत्वं. Ś1 Ko Dn तं; S तु (for त्वं). — d) K2. 4 Ñ3 Dn तत्र प्राप्स्य°; D2. 5 तत्र वत्स्य°.

20 For S cf. v. l. 23. With 20 cf. 3 and 8. Before 20, Ko. 2 Ñ B (except B4) D (except D5) ins. ययातिरु°. — c) Ś1 K1 Ñ1. 2 एवं (for एकं).

21 For S cf. v. l. 23. Ś1 K1 om. उवाच. — d) K (except K2) तज्जरां.

22 For S cf. v. l. 23. With 22 cf. 7, 11 and 18. Ś1 K1 om. उवाच. — a) Ś1 यदि मे; K1 यन्मे त्वं. — c) K2. 4 D2 °दोषास्. K1 त्वयोक्ते यः; K2 B2 °योक्ता ये; K4 °योक्तोहं; Dn D1. 4 त्वया प्रोक्तः. — d) Ñ2 B4 Da1 त्वां; B1. 6 Da2 तां; D2 तान् (for त्वं). Ko. 4 Ñ2 Da1 B5. 6 °पत्स्यते; K2 °पद्यसे; B1 °पत्स्यसि.

23 In Ś1 the portion of the text from 23 up to 1. 80. 2 is lost on the missing upper half of a fol. — a) Ko Ñ3 B D2 प्रजा च; K3 प्रजा स; K4 राजा च. K3. 4 D2 यौवनं. D2 प्राप्य. — b) Ko. 3. 4 B D2 विनशिष्य° (B4 विनंक्ष्यति ह्यनो).

☞ For 17–23, S subst.:

830* द्रुह्युः ।
(cf. $21^{ab}$) जीर्णः शिशुवदादत्तेऽकालेऽन्नमशुचिर्यथा ।
($21^{c}$) न जुहोति च कालेऽग्निं न बुध्यति च कालतः ।
($21^{d}$) न च कृत्यं करोत्येष तां जरां नाभिकामये ।
ययातिः ।
($22^{ab}$) यो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
($22^{cd}$) जरादोषस्त्वयोक्तोऽयं तस्मात्त्वं नाभिपद्यसे ।
($23^{ab}$) प्रजाश्च यौवनं प्राप्ता विनशिष्यन्त्यतस्तव ।
($23^{cd}$) अग्निप्रस्कन्दनपरस्त्वं चाप्येवं भविष्यसि ।
($20^{ab}$) अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
($20^{cd}$) एकं वर्षसहस्रं वै चरेयं तव रूपधृक् ।
पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा च प्रतिपत्स्ये वै पाप्मानं जरया सह ।

G. 1. 3492 B. 1. 84. 27 K. 1. 78. 28 पूरो त्वं मे प्रियः पुत्रस्त्वं वरीयान्भविष्यसि ।
जरा वली च मे तात पलितानि च पर्यगुः ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ॥ २४
पूरो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
कंचित्कालं चरेयं वै विषयान्वयसा तव ॥ २५
पूर्णे वर्षसहस्रे तु प्रतिदास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥ २६

वैशंपायन उवाच ।

एवमुक्तः प्रत्युवाच पूरुः पितरमञ्जसा ।
यथात्थ मां महाराज तत्करिष्यामि ते वचः ॥ २७
प्रतिपत्स्यामि ते राजन्पाप्मानं जरया सह ।
गृहाण यौवनं मत्तश्चर कामान्यथेप्सितान् ॥ २८
जरयाहं प्रतिच्छन्नो वयोरूपधरस्तव ।
यौवनं भवते दत्त्वा चरिष्यामि यथात्थ माम् ॥ २९

ययातिरुवाच ।

पूरो प्रीतोऽस्मि ते वत्स प्रीतश्चेदं ददामि ते ।
सर्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ॥ ३०

इति श्रीमहाभारते आदिपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

अनुः ।
($17^{ab}$) न हस्तिनं नरो नाश्वं जीर्णो भुङ्क्ते न पीठकम् ।
($17^{cd}$) वाग्दुर्भगास्य भवति तां जरां नैव कामये ।
ययातिः ।
($18^{ab}$) यो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
(829*) हस्त्यश्वरथयुग्यानामध्वा न स्यात्कदाचन ।
हस्तिनां पीठकानां वा गर्दभानां तथैव च ।
उष्ट्राणां च गवां चैव शिबिकायास्तथैव च ।
यद्वान्यद्वाहनं किंचिद्देवो हन्यात्कचित्कचित् ।
अराजा तव जातश्च भविष्यति च दुर्मते ।
वैशंपायनः ।
प्रत्याख्यातश्चतुर्भिश्च शप्त्वा तान्यद्यदिच्छया ।
पूरोः सकाशमगमज्ज्ञात्वा पूरुमलङ्घिनम् ।

[ (L. 1) $G_{1.2.4.5}$ शुचिवद्. — (L. 4) $T_1$ $G_1$ त्वं (for स्वं). $G_3$ (hapl.) om. lines 5–14. — (L. 5) $G_2$ repeats this line after line 14. $G_{1.2}$ (*sup. lin.* as in text) °क्तो मे; $M_5$ त्वयोक्तोहं. $M_{3.5}$ तं; $M_{6-8}$ न (for त्वं). $T_1$ $M_{3.5}$ त्वं ($T_1$ तु) प्रपद्यसे; $G_1$ $M_{6-8}$ प्रतिपत्स्यसे (for नाभि°). — (L. 6) M प्राप्य. — After line 7, $G_{4.5}$ read 19 for the first time. In $G_1$ the sequence from 7–20 is: 7, 15–19, 831*, 8–14, then a repetition of (the three lines) 15, 18 and 19, and finally 20. — $T_2$ $G_2$ ins. after line 7: $G_{1.4.5}$, after the first occurrence of line 19:

831* एवं ब्रुवन्तं शप्त्वाथ ययातिः सुतमात्मनः ।
शर्मिष्ठायाः सुतं चानुमिदं वचनमब्रवीत् ।

On the other hand, $T_1$ ins. after line 7:

832* अनुं पुत्रमथाहूय राजा वचनमब्रवीत् ।

— (L. 8) M अनुद्रुह्यो प्रपद्यस्व. — (L. 9) $G_1$ यौवनेन त्वदीयेन चरें°. — (L. 12) $T_1$ रथं चाश्वं. M न हस्तिरथनागाश्व. — (L. 14) $T_1$ अनो मे त्वं. — After line 14, $G_2$ repeats line 5. — (L. 15) $T_2$ $G_{4-6}$ °रथमुख्यानां — (L. 16) $T_1$ $G_{1.3}$ यानानां (for हस्ति°). — (L. 17) $M_{6-8}$ °कानां त°. ]

24 $Ś_1$ missing (cf. v. l. 23). $K_1$ (hapl.) om. 24. Before 24, Ñ B $Da_2$ Dn ins. ययातिरु°; S (except $G_3$) ययातिः; $D_2$ has lacuna. — $^a$) $K_4$ $T_2$ $G_{2.4-6}$ मे त्वं (by transp.). $Ñ_3$ वरः (for प्रियः). $K_2$ त्वं मे प्रियतरः पुत्रः; $T_1$ $G_{1.3}$ पूरो प्रियस्त्वं पुत्राणां. — $^b$) $D_5$ $T_1$ वरीयांस्त्वं (by transp.); $T_2$ G M त्वं गरी($G_5$ कनी)यान् ($G_{1.3}$ गरीयान्वै). — $24^{cd}$=(var.) $2^{ab}$. — $^c$) $Ñ_2$ $B_4$ जरावलीढं. Ñ B D (except $D_5$) मां (for मे). $G_3$ तातस्य (for मे तात). — $G_3$ om. $24^e$–$25^b$.

25 $Ś_1$ missing; $G_3$ om. $25^{ab}$ (cf. v. l. 23, 24). With 25 cf. 3, 8 and 20. — $^a$) $B_4$ तस्मात् (for पूरो). $M_{6-8}$ मे प्र- (for प्रति-). — $K_4$ (hapl.) om. $25^{cd}$ and 26; $D_2$ om. $25^{cd}$. — $^c$) S यथाकामं ($G_{1.4-6}$ °कालं; $G_3$ यौवनेन). — $^d$) $G_3$ विषयांस्तव पुत्रक.

26 $Ś_1$ missing; $K_4$ om. 26 (cf. v. l. 23, 25). With 26 cf. 4, 9 and 16. — $^a$) $K_1$ $Ñ_3$ $B_4$ Da ते (for तु). — $^b$) $Ñ_2$ $B_5$ $D_2$ तव; $B_{3.6}$ Dn $D_{1.4.5}$ पुनः (for प्रति-). $G_6$ प्रतिपत्स्यामि. — $K_2$ om. $26^{cd}$. — $^c$) $D_2$ स्वं चावाप्स्यामि भूयोहं.

27 $Ś_1$ missing (cf. v. l. 23). $K_{1.3}$ $D_5$ S om. उवाच; $D_2$ lacuna for the ref. Before $27^{cd}$, $D_4$ marg. ins. पूरुरुवाच. — $^c$) $T_2$ G (except $G_2$) यदात्थ. $M_{3.5}$ त्वं (for मां). — After 27, S ins.:

833* गुरोर्वै वचनं पुण्यं स्वर्ग्यमायुष्करं नृणाम् ।
गुरुप्रसादात्त्रैलोक्यमन्वशासच्छतक्रतुः ।
गुरोरनुमतं प्राप्य सर्वान्कामानवाप्नुयात् ।

## ८०

वैशंपायन उवाच ।
पौरवेणाथ वयसा ययातिर्नहुषात्मजः ।
प्रीतियुक्तो नृपश्रेष्ठश्चचार विषयान्प्रियान् ॥ १
यथाकामं यथोत्साहं यथाकालं यथासुखम् ।
धर्माविरुद्धान्राजेन्द्रो यथार्हति स एव हि ॥ २
देवानतर्पयद्यज्ञैः श्राद्धैस्तद्वत्पितॄनपि ।
दीनाननुग्रहैरिष्टैः कामैश्च द्विजसत्तमान् ॥ ३
अतिथीनन्नपानैश्च विशश्च परिपालनैः ।
आनृशंस्येन शूद्रांश्च दस्यून्संनिग्रहेण च ॥ ४
धर्मेण च प्रजाः सर्वा यथावदनुरञ्जयन् ।
ययातिः पालयामास साक्षादिन्द्र इवापरः ॥ ५
स राजा सिंहविक्रान्तो युवा विषयगोचरः ।
अविरोधेन धर्मस्य चचार सुखमुत्तमम् ॥ ६
स संप्राप्य शुभान्कामांस्तृप्तः खिन्नश्च पार्थिवः । C. 1. 3506 B. 1. 85. 7 K. 1. 79. 7

---

28 Ś1 missing (cf. v. l. 23). — After $28^{ab}$, S ins.:

834* यावदिच्छसि वा जीवं तावत्त्वां धारयाम्यहम् ।

[ T2 M °सि तावच्च; G3 °सि राजेंद्र. T2 M धारयिष्यामि ते जरां. ]

— $^{d}$) Ko. 3. 4 चर राजन्यथेप्सितं.

29 Ś1 missing (cf. v. l. 23). — $^{a}$) M3. 5 सं- (for अहं). — $^{c}$) G3 M6–8 भवतो. — $^{d}$) B4 यथेच्छया; T2 G1. 4. 6 यदात्थ मां.

30 Ś1 missing (cf. v. l. 23). K1 S om. उवाच; D2 lacuna for the ref. — $^{a}$) Ñ3 B4 Da D5 T1 G1. 3 M6–8 ते पुत्र; T2 G2. 4–6 M3. 5 भद्रं ते. — $^{b}$) B4 वरं चैव; D5 प्रीतस्यैव; G3 प्रीतिं चेमां; M3. 5 °श्चाहं. B1. 6 ददानि. B3. 5. 6 वै (for ते). — After 30, K1 ins.:

835* धर्मे चार्थे च कामे च ख्यातिं लोके गमिष्यति ।;

while Ko. 3. 4 D ins.:

836* एवमुक्त्वा ययातिस्तु काव्यं स्मृत्वा महातपाः ।
संक्रामयामास जरां तदा पूरौ महात्मनि ।

= (var.) Matsyap. 34. 1.

Colophon om. in B5. Ś1 missing (cf. v. l. 23). — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1. 2 T1 संभव; to it Ñ1. 2 add ययात्युपाख्यान. Ko–2. 4 Ñ3 B (B5 om.) D T2 G4 M3. 5 (om. the sub-parvan name) mention only यायात. — *Adhy. name:* Ko. 4 जरासंक्रमणं; K3 पूरोर्जरासंक्रमणं; T2 G4 M3. 5 पूरुयौवनप्रदानं. — *Adhy. no.* (figures, words or both): B5 Da1 78; D4m 82; T1 69; T2 19; G M 20. — *S'loka no.:* Da1 35; Dn 34. — *Aggregate s'loka no.:* Dn2 3471.

### 80

☞ This adhy. is missing in V1 (cf. v. l. 1. 68. 74); the MS. is *wholly* ignored here.

1 In Ś1, 1–3 are missing (cf. v. l. 1. 79. 23). S om. उवाच. — $^{ab}$) Ñ3 °वेनाथ रूपेण वयसा नहु°. — After $1^{ab}$, K4 D4 (marg.) S ins.:

837* रूपयौवनसंपन्नः कुमार इव सोऽभवत् ।

[ K4 कौमारं प्रत्यपद्यत; D4 M6–8 °रः समपद्यत. ]

— $^{c}$) Ko. 1. 4 T1 नृपश्रेष्ठ; B5 Dn3 D5 नर°. — $^{d}$) G3 °यान्बहून्.

2 Ś1 missing (cf. v. l. 1). — $2^{ab}$ = (var.) $9^{ab}$. — $^{a}$) B4 Da M यथाकालं (for °कामं). — $^{b}$) Ko B4 Da M (except M8) यथाकामं (for °कालं). G1 (before corr.) अरिंदम. — $^{c}$) Ko. 3. 4 Ñ1. 2 B (except B1) D (except Da) T G (except G3) °विरुद्धं. Some MSS. राजेंद्र. — $^{d}$) Ñ1. 2 Da तु; Ñ3 B4 D5 ह (for हि). T G यथा भवति सोन्वभूत् (G1. 3 यथार्हं सोन्वसेवत); M बुभुजे विषयान्प्रियान्.

3 Ś1 resumes (cf. v. l. 1. 79. 23). — $^{b}$) Ñ3 चान्नैः; T1 श्राद्धे. M3. 5 तावत्. G1. 3 श्राद्धैः संतर्पयन्पितॄन्. — $^{c}$) S दीनांधकृपणान्वृद्धान् (T1 G3 M °न्विप्रान्). Cd cites अनुग्रह. — $^{d}$) Ś1 होमैश्च. S अनाथांश्चाभ्य(T1 G3 °श्चाप्य-; G1 °श्चापि; G2 °थानभ्य-; M °थानप्य)पूजयत्.

4 $^{a}$) M °थींश्चान्न°. — $^{b}$) B5 विषयान्परि°. K2 °पालनात्. — $^{c}$) B5 भूतांश्च. — $^{d}$) D5 M3. 5 दस्यूनां नि°. K2 संग्रहणेन; D3 T G (except G4) M6–8 निग्रहणेन; Cd as in text.

5 $^{a}$) B वै (for च). S स्वधर्मेण प्र°. — $^{c}$) G3 पाळया-

C 1. 3506 B 1. 85. 7 K 1. 79. 7 कालं वर्षसहस्रान्तं ससार मनुजाधिपः ।। ७
परिसंख्याय कालज्ञः कलाः काष्ठाश्च वीर्यवान् ।
पूर्णं मत्वा ततः कालं पूरुं पुत्रमुवाच ह ।। ८
यथाकामं यथोत्साहं यथाकालमरिंदम ।
सेविता विषयाः पुत्र यौवनेन मया तव ।। ९
पूरो प्रीतोऽस्मि भद्रं ते गृहाणेदं स्वयौवनम् ।
राज्यं चैव गृहाणेदं त्वं हि मे प्रियकृत्सुतः ।। १०
प्रतिपेदे जरां राजा ययातिर्नाहुषस्तदा ।
यौवनं प्रतिपेदे च पूरुः स्वं पुनरात्मनः ।। ११
अभिषेक्तुकामं नृपतिं पूरुं पुत्रं कनीयसम् ।
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ।। १२
कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो ।
ज्येष्ठं यदुमतिक्रम्य राज्यं पूरोः प्रदास्यसि ।। १३
यदुर्ज्येष्ठस्तव सुतो जातस्तमनु तुर्वसुः ।
शर्मिष्ठायाः सुतो द्रुह्युस्ततोऽनुः पूरुरेव च ।। १४
कथं ज्येष्ठानतिक्रम्य कनीयान्राज्यमर्हति ।

---

मास सर्वांश्च. — $^{d}$) $Ś_{1}$ $K_{1}$ °दिंदुरिवा°(!). $G_{3}$ °वामरान्.

7 $^{a}$) $G_{3}$ स संतर्प्य. S सुखान् (for शुभान्). — $^{c}$) $T_{2}$ G (except $G_{1.3}$) °सहस्रं तत्.

8 After $8^{ab}$, Dn $D_{1.4}$ ins.:

838* यौवनं प्राप्य राजर्षिः सहस्रपरिवत्सरान् ।
विश्वाच्या सहितो रेमे व्यभ्राजन्नन्दने वने ।
अलकायां स कालं तु मेरुशृङ्गे तथोत्तरे ।
यदा स पश्यते कालं धर्मात्मा तं महीपतिः ।

9 Before 9, $D_{4}$ (marg.) ins. ययातिरुवाच; S (except $T_{2}$ $G_{2.4.5}$) ययातिः. — $9^{ab}$=(var.) $2^{ab}$. — $^{a}$) $B_{1.5.6}$ $D_{2}$ S (except $T_{2}$ $G_{1.6}$) यथाकालं (for °कामं). — $^{b}$) $B_{1.5.6}$ $D_{2}$ $T_{1}$ $G_{3-5}$ M यथाकाम° ($M_{6-8}$ यथासुख°). — $^{c}$) $M_{6-8}$ °याः सम्यग्. — After 9, $D_{4}$ (marg.) T G ins.:

839* तेजसा तव सत्पुत्र पूर्णं यौवनमुत्तमम् ।

$K_{0.4}$ (om. line 6) Dn $D_{2}$ (om. line 6) ins. after 9: $D_{4}$ (marg.; om. line 8), after 839*:

840* न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत् ।
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ।
पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः ।
तथाप्यनुदिनं तृष्णा ममैतेष्वभिजायते ।
तस्मादेनामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निर्ममो भूत्वा चरिष्यामि मृगैः सह ।

[ Cf. 693* (v. l. 1. 70. 44). — The source of this is the Viṣṇup. (4. 10. 9–15), where the entire passage (with the exception of line 6) recurs with but slight variation. — (L. 1–2) = lines 6–7 of 693*, and Manu 2. 94. ]

10 $T_{1}$ $M_{3.5}$ om. $10^{ab}$. — $^{a}$) $D_{2}$ प्रीतोस्मि तव भद्रं ते. — $^{b}$) B (except $B_{4}$) $D_{2}$ त्वं (for इदं). — $^{c}$) $K_{4}$ Da Dn $D_{1.4}$ $M_{3.5}$ चेदं; B $D_{2.5}$ T G च मे ($G_{1}$ च त्वं) (for चैव). Da Dn $D_{1.4}$ त्वं (for इदं). — After $10^{c}$, T G ins.:

841* यावदिच्छसि यौवनम् ।
तावद्दीर्घायुषं भुङ्क्ष्व;

while M ins.:

842* मया दत्तं तु सान्वयम् ।
यावदिच्छसि तावच्च यौवनेन समन्वितम् ।
भुङ्क्ष्व राज्यं सुदीर्घायुः.

— $^{d}$) $K_{2}$ पुनः (for सुतः).

11 Before 11, all MSS. ins. वैशं° उ° ($K_{1.2}$ $D_{2}$ S om. उ°). — $^{a}$) $D_{5}$ राजन्. — $^{b}$) S °तिर्नहुषात्मजः. — $^{c}$) $K_{2}$ स्वं प्रपेदे च; $G_{1.3}$ प्रतिसंपेदे. $M_{6-8}$ स (for च). — $^{d}$) $K_{2}$ स पूरुः; $D_{2.5}$ पूरुश्च; $G_{1.2.4}$ °स्त्वं; $G_{3}$ °स्तं. S पुनरात्मवान्.

12 $^{a}$) Hypermetric! $Ś_{1}$ $K_{1}$ $D_{5}$ तु नृपं; $K_{0.2}$ $Ñ_{1.2}$ नृपं (sic); $K_{3.4}$ च नृपं (for नृपतिं). — $^{c}$) T G °खाः पौराः.

13 $^{a}$) $M_{6-8}$ °स्य दौहित्रं. — $^{b}$) $K_{1}$ सुतं विभो; $M_{3.5}$ प्रियं सुतं. — $^{c}$) $K_{0}$ ज्येष्ठं सुतम्. B (except $B_{4}$) $D_{2}$ यदुं व्यतिक्रम्य. — $^{d}$) B (except $B_{4}$) $D_{2}$ पूरो राज्यं (by transp.). $K_{0.3.4}$ $Ñ_{2}$ B Dn $D_{1.2.4}$ प्रयच्छसि.

14 $^{a}$) Da यदुः श्रेष्ठः. — $^{b}$) $Ś_{1}$ $B_{5}$ $T_{1}$ $M_{3.5}$ °स्तदनु; $K_{0.3.4}$ राजंस्तमनु; $G_{3}$ °स्तव तु. Some MSS. तुर्वशुः. — $^{c}$) $G_{4.5}$ ततो (for सुतो). Some MSS. द्रुह्युः. — $^{d}$) T G अनुर्द्रुह्यु($G_{6}$ अनुः पूरु)श्च पार्थिव ($T_{2}$ $G_{6}$ °वः); M अनुद्रुह्युरनंतरः (sic).

15 $^{a}$) $K_{0}$ $B_{1}$ $D_{5}$ ज्येष्ठमति°. — $^{b}$) S (except $T_{1}$ $G_{3}$) यवीयान्. — $^{c}$) $K_{0}$ एवं (for एतत्). $G_{2.5}$ °यामास; $G_{4}$ °यामोद्य. — $^{d}$) $Ś_{1}$ धर्मस्तमनु°; $K_{3.4}$ धर्मं समनु°; $B_{3.6}$

एतत्संबोधयामस्त्वां धर्मं त्वमनुपालय ॥ १५
यया‍तिरुवाच ।
ब्राह्मणप्रमुखा वर्णाः सर्वे शृण्वन्तु मे वचः ।
ज्येष्ठं प्रति यथा राज्यं न देयं मे कथंचन ॥ १६
मम ज्येष्ठेन यदुना नियोगो नानुपालितः ।
प्रतिकूलः पितुर्यश्च न स पुत्रः सतां मतः ॥ १७
मातापित्रोर्वचनकृद्धितः पथ्यश्च यः सुतः ।
स पुत्रः पुत्रवद्यश्च वर्तते पितृमातृषु ॥ १८
यदुनाहमवज्ञातस्तथा तुर्वसुनापि च ।
द्रुह्युना चानुना चैव मय्यवज्ञा कृता भृशम् ॥ १९
पूरुणा मे कृतं वाक्यं मानितश्च विशेषतः ।
कनीयान्मम दायादो जरा येन धृता मम ।
मम कामः स च कृतः पूरुणा पुत्ररूपिणा ॥ २०
शुक्रेण च वरो दत्तः काव्येनोशनसा स्वयम् ।
पुत्रो यस्त्वानुवर्तेत स राजा पृथिवीपतिः ।
भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यताम् ॥ २१
प्रकृतय ऊचुः ।
यः पुत्रो गुणसंपन्नो मातापित्रोर्हितः सदा ।
सर्वमर्हति कल्याणं कनीयानपि स प्रभो ॥ २२
अर्हः पूरुरिदं राज्यं यः सुतः प्रियकृत्तव । C. 1. 3530 B. 1. 85. 31 K. 1. 79. 37

---

स्वधर्ममनु॰; B5 धर्मं स्वमनु॰; Da Dn D1.4 धर्मं त्वं प्रति॰ (Da2 D4 परि॰); D5 धर्ममेवानु॰; G2.4.5 त्वं धर्ममनु॰. M अनुचिंतय. — After 15, K2 ins.:

843* धर्मं चोल्लङ्घयन्राजा प्रजानां दुःखमावहेत् ।

16 Ś1 K1 S om. उवाच. — $^{a}$) D2 द्विजातिप्र॰. — $^{b}$) M8 मद्वचः. — T2 om. $16^{c}$–$18^{b}$.

17 T2 om. 17 (cf. v. l. 16). — $^{d}$) G3 स ह; M6–8 न तु.

18 T2 om. $18^{ab}$ (cf. v. l. 16). — $^{a}$) G1 वचकृद्धि; G2 वचनाद्धि (for वचनकृत्). — $^{b}$) K2 हितकर्मा च. T1 G हितस्य (T1 G2.4.6 ॰श्च) विभवस्य च. — $^{c}$) K4 Ñ2 B (except B1) D2 तु (for च). — After 18, T1 G1.3 ins.:

844* अपुत्री तु नरः स्वर्गाद्दुःखं नरकमाविशेत् ।

D2 (marg.) T1 (om. line 1).2 G2.3 (om. line 1).4–6 M ins. after 18: G1, after 844* above:

845* पुदिति नरकस्याख्या दुःखं हि नरकं विदुः ।
पुतस्त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च ।
आत्मनः सदृशः पुत्रः पितृदेवर्षिपूजने ।
यो बहूनां गुणतरः स पुत्रो ज्येष्ठ उच्यते ।
ज्येष्ठांशहारो गुणकृदिह लोके परत्र च । [5]
श्रेयान्पुत्रगुणोपेतः स पुत्रो नेतरो वृथा ।
वदन्ति धर्मं धर्मज्ञाः पितॄणां पुत्रकारणात् ।

[(L. 1) T2 G4–6 पुदित्या नर॰; M पूतीति नर॰. — (L. 2) D2 G1.2 पितुस्त्रा॰; G3 अतस्त्रा॰; G5 पुंदस्त्रा॰; M पूतित्रा॰. — (L. 4) D4 भवेदेकः; G3 गुणकरः. — After line 4, G1.3 ins.:

846* मूकोऽन्धबधिरः श्वित्री स्वधर्मं नानुतिष्ठति ।
चोरः किल्बिषकः पुत्रो जेष्ठो न ज्येष्ठ उच्यते ।

— (L. 5) T2 G4–6 ज्येष्ठांशभाक्स. — (L. 6) T2 G2.4–6 पुत्रो गुणो॰. ]

19 $^{b}$) A few MSS. तुर्वशुना. S पुनः (for अपि च). — $^{c}$) Ś1 K द्रुह्येन (K2.3 ॰ण); Da M6–8 द्रुह्युणा. G3 om. the first च. — $^{d}$) B भृशं कृता (by transp.); D2 भृशं तथा. — After 19, K3 reads $21^{ab}$ (for the first time), followed by 848* (cf. v. l. 21), repeating $21^{ab}$ in its proper place.

20 $^{a}$) B D (except D5) G3 तु (B1 च) (for मे). In Ś1, the portion of the text from $20^{b}$ up to the end of this adhy. is lost on the missing upper half of a fol. (62). — $^{b}$) K1.2 B (except B5) Da Dn D1.4 मानितं च; D5 ॰तं मे. — $^{d}$) Ñ1.2 D (except D2.5) G3 transp. जरा and धृता. — After $20^{cd}$, G3–5 ins.:

847* वेदोक्तं संभवं मह्यमनेन हृदयोद्भवम् ।
तस्य जातमिदं कृत्स्नमात्मा पुत्र इति श्रुतिः ।

— T2 G6 M om. $20^{e}$–$21^{d}$. — $^{e}$) B D2 स च कामो मम (by transp.). — $^{f}$) K0.4 हितकांक्षिणा; Ñ2 B5 D (except D2.5) मित्ररूपिणा.

21 Ś1 missing. T2 G6 M om. $21^{abcd}$ (cf. v. l. 20). For K3 cf. v. l. 19. — $^{a}$) D5 ममापि (for शुक्रेण). — $^{c}$) K1 Dn1 G1–3.5 यस्त्वनु॰. — T1 G (except G6) ins. after $21^{cd}$: K3, after the first occurence of $21^{ab}$ (cf. v. l. 19):

848* यो वानुवर्ती पुत्राणां स पुत्रो दायभाग्भवेत् ।
[ K3 योनुवर्ती पितॄणां स पुत्रो दायादभाग्भवेत् ]

— $^{e}$) G4 भवतो ह्यनुयाम्येवं; G5 ॰तो ह्यनुनया॰. M एष (for एवं).

22 Ś1 missing (cf. v. l. 20). K3 प्रजाः; T2 G

C. 1. 3530 B. 1. 85. 31 K. 1. 79. 37 वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरम् ॥ २३

वैशंपायन उवाच ।

पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा ।
अभ्यषिञ्चत्ततः पूरुं राज्ये स्वे सुतमात्मजम् ॥ २४
दत्त्वा च पूरवे राज्यं वनवासाय दीक्षितः ।
पुरात्स निर्ययौ राजा ब्राह्मणैस्तापसैः सह ॥ २५
यदोस्तु यादवा जातास्तुर्वसोर्यवनाः सुताः ।
द्रुह्योरपि सुता भोजा अनोस्तु म्लेच्छजातयः ॥ २६
पूरोस्तु पौरवो वंशो यत्र जातोऽसि पार्थिव ।
इदं वर्षसहस्राय राज्यं कारयितुं वशी ॥ २७

इति श्रीमहाभारते आदिपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

## ८१

वैशंपायन उवाच ।

एवं स नाहुषो राजा ययातिः पुत्रमीप्सितम् ।
राज्येऽभिषिच्य मुदितो वानप्रस्थोऽभवन्मुनिः ॥ १
उषित्वा च वने वासं ब्राह्मणैः सह संश्रितः ।

(except G1.3) पौराः (for प्रकृ°). K1 S om. ऊचुः. — a) K3 पुत्रो यो; T2 G स पुत्रो. T1 G1 M गुणसंयुक्तो; T2 G2–6 गुणयुक्तो हि. — b) S हितकृत्संततं गुरोः (M पितुः). — d) K G2 सं (? read सन्) प्रभो; B6 Dn D1.4 सत्तमः; G1 यः प्रभो. — After 22, S ins.:

849* वेदधर्मार्थशास्त्रेषु मुनिभिः कथितं पुरा ।

[ T1 वेदे धर्मेऽथवा शास्त्रे; G3 वेदे धर्मार्थशास्त्रे च; M वेदे धर्मे (M3.5 धर्मे वेदे) चार्थशास्त्रे. ]

23 Ś1 missing (cf. v. l. 20). — b) K0.1.3.4 B4.6 D2.5 यः प्रियः; K2 M यः पुत्रः; T1 स्वसुतः. — c) M5 वरदानाच्च. — d) K0 D2 कर्तुमुत्तरं.

24 Ś1 missing (cf. v. l. 20). S om. उवाच. — c) K1.4 Dn3 D5 T1 G2 अभिषि°. T G तथा; M तदा. — d) K2 Ñ1 B D (except D2.5) °मात्मनः. S ययातिर्द्विजपूर्वकं. Cf. line 2 of 850*. — After 24, D4 (marg.) S ins.:

850* यदुं च तुर्वसुं चोभौ द्रुह्युं चैव सहानुजम् ।
अन्तेषु स विनिक्षिप्य नाहुषः स्वात्मजान्सुतान् ।

[ (L. 1) D4 M6–8 तुर्वसुं चैव. — (L. 2) T2 G6 अथ; G1 असौ (for स). G1.3 ययातिः (for नाहुषः). ]

25 Ś1 missing (cf. v. l. 20). — a) K0.3.4 स दत्वा; T1 G3 दत्वा तु. — b) D5 °वासं ततो गतः. — c) G1.3 पुरात्तु. S तस्मात् (for राजा). — d) B D2 तापसैर्वृतः. — After 25, K0.4 D1.4 (marg.) ins.:

851* देवयान्या च सहितः शर्मिष्ठया च भारत ।
अकरोत्स वने राजा सभार्यस्तप उत्तमम् ।

26 Ś1 missing (cf. v. l. 20). — a) K2 B5 राजन्; G1.3 पुत्राः (for जाताः). Ñ3 यदोः सुतास्तु यदवः; B1.4.6 यदोर्जातास्तु (B1 °श्च) यदवः; T G2.4–6 M यदोर्जाता यादवास्तु (M3.5 °श्च). — b) K4 Ñ B D °नाः स्मृताः. — c) K द्रुह्यस्य तु (K4 च). Ñ1 B3 Da द्रुह्योस्तु तनया भोजा; B1.4–6 Dn D1.4 द्रुह्योः सुतास्तु (B1.4–6 °श्च) वै भो°.

27 Ś1 missing (cf. v. l. 20). — c) Ñ1.2 B3 Dn D1.4 °सहस्राणि. — d) T1 कारय नः प्रभो; T2 G कारयिता प्रभो; M3.5 कलियुगेभवत्. D2 बली; M6–8 प्रभो (for वशी).

Colophon. — *Major parvan:* T2 G1.3–6 M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 Da2 T1 संभव; to it Ñ1.2 add ययात्युपाख्यान. D2 G4 M (om. sub-parvan name) mention only यायात. Ś1 K0–3 Ñ3 B Da D1.4.5 indicate the end of the Yayāti episode by यायातं समाप्तं; Ñ1.2 Dn G1.4 by पूर्वयायातं समाप्तं. — *Adhy. name:* G1 ययातेर्वनवासः. — *Adhy. no.* (figures, words or both): Ś1 K1 illegible; B5 79; Da1 D4m 83; Dn3 84; T1 70; T2 20; G M 21. — *S'loka no.:* Ñ3 Da1 28; Dn 35; M3 33. — *Aggregate s'loka no.:* Dn2 3506.

### 81

☞ This adhy. is missing in V1 (cf. v. l. 1. 68–74); the MS. is *wholly* ignored here.

1 K1.3 D2.5 S om. उवाच. — b) G1.3 पुरुम् (for पुत्रम्). — c) = 10c.

2 a) K3.4 T2 G2.4.6 तु; M3.5 स (for च). — b) K0.3.4 तापसैः. K0 D5 सह संसितः; K2 सह संस्तुतः; K3 D1.4 सह शंसितः; B Dn D2 संशित (Dn D2 शंसित) व्रतः (B1–4 D2 °तैः); Da सह संगतैः (Da2 °तः). — c) D5

फलमूलाशनो दान्तो यथा स्वर्गमितो गतः ॥ २
स गतः सुरवासं तं निवसन्मुदितः सुखम् ।
कालस्य नातिमहतः पुनः शक्रेण पातितः ॥ ३
निपतन्प्रच्युतः स्वर्गादप्राप्तो मेदिनीतलम् ।
स्थित आसीदन्तरिक्षे स तदेति श्रुतं मया ॥ ४
तत एव पुनश्चापि गतः स्वर्गमिति श्रुतिः ।
राज्ञा वसुमता सार्धमष्टकेन च वीर्यवान् ।
प्रतर्दनेन शिबिना समेत्य किल संसदि ॥ ५

जनमेजय उवाच ।

कर्मणा केन स दिवं पुनः प्राप्तो महीपतिः ।
सर्वमेतदशेषेण श्रोतुमिच्छामि तत्त्वतः ।
कथ्यमानं त्वया विप्र विप्रर्षिगणसंनिधौ ॥ ६
देवराजसमो ह्यासीद्ययातिः पृथिवीपतिः ।
वर्धनः कुरुवंशस्य विभावसुसमद्युतिः ॥ ७
तस्य विस्तीर्णयशसः सत्यकीर्तेर्महात्मनः ।
चरितं श्रोतुमिच्छामि दिवि चेह च सर्वशः ॥ ८

वैशंपायन उवाच ।

हन्त ते कथयिष्यामि ययातेरुत्तरां कथाम् ।
दिवि चेह च पुण्यार्थां सर्वपापप्रणाशिनीम् ॥ ९
ययातिर्नाहुषो राजा पूरुं पुत्रं कनीयसम् ।
राज्येऽभिषिच्य मुदितः प्रवव्राज वनं तदा ॥ १०
अन्तेषु स विनिक्षिप्य पुत्रान्यदुपुरोगमान् ।
फलमूलाशनो राजा वने संन्यवसच्चिरम् ॥ ११
संशितात्मा जितक्रोधस्तर्पयन्पितृदेवताः ।
अग्नींश्च विधिवज्जुह्वन्वानप्रस्थविधानतः ॥ १२
अतिथीन्पूजयामास वन्येन हविषा विभुः ।
शिलोञ्छवृत्तिमास्थाय शेषान्नकृतभोजनः ॥ १३
पूर्णं वर्षसहस्रं स एवंवृत्तिरभून्नृपः । C. 1. 3548 B. 1. 86. 15 K. 1. 80. 16

---

राजा; S भूत्वा (for दान्तो). — d) Ñ3 यदा; B1 (m as in text) D5 तदा; Dn S ततः (for यथा).

3 a) K3 स गत्वा; D2 संगतः. Ñ1 B3 Da Dn D1.4 स्वर्निवासं; Ñ3 स्वर्गं°; D2 सुख°. K2 B3 Da तु (for तं). Ñ2 स्वर्निवासित्वं; S स्वर्ग(T1 G1 M स्वं नि)वासार्थं. — b) Ñ1.2 B (except B5) D (except D2) सुखी. S (except T1 G1.3) सुखमुत्तमं (for मुदितः सु°). — c) K0.3.4 Ñ1.2 D (except D2) S कालेन नाति(K3 Dn1 m चाति)महता. — After 3, D4 (marg.; om. lines 2–3) S ins.:

852* साधुभिः संगतिं लब्ध्वा पुनः स्वर्गमुपेयिवान् ।
जनमेजयः ।
स्वर्गतश्च पुनर्ब्रह्मन्निवसन्देववेश्मनि ।
कालेन नातिमहता शक्रेण च्यावितः कथम् ।

With the last line cf. 3cd and v. l.

4 a) K0.3.4 D5 विवशः; K1 नियतं; Ñ3 S (except M6–8) निवसन्. D5 पतितः (for प्रच्यु°). — b) G3 संप्राप्तो. — c) A few MSS. °रीक्षे. T1 G3 स्थितोंतरिक्षे दौहित्रैः. — d) Ñ3 G3 तथेति.

5 ab) T2 G2.4.6 एवं. K2 transp. पुनः and गतः. Ñ1.2 B3 Dn D5 T2 G श्रुतं (G2.4 °तः). — cd) S तदा सार्धं वसुमता श्रीमता चाष्टकेन च. — Ś1 om. 5ef.

6 Da1 जन्मे°. Ś1 K1 om. उवाच. S om. जनमे° उ° (cf. 852*). — ab) S कारणेन दिवं केन संप्राप्तो द्विजसत्तम. — Ś1 K1 om. 6e–7d. — 6ef = 1. 62. 2cd. — f) K0.3.4 Da1 M6–8 देवर्षि°.

7 Ś1 K1 om. 7 (cf. v. l. 6). — a) S (except T1 G1.3) राजा देवसमो. — c) Ñ1 B D2 M6–8 सोमवंश°. — d) T1 G1.3 °समप्रभः.

9 Ś1 K1.3 D5 S om. उवाच. — a) = 1. 53. 35a. — b) B3.5.6 Dn D1.4 (m as in text) °रुत्तमां. — c) T1 G1.3 नि(T1 अ)खिलेन (for दिवि चेह). Ś1 K1 पुण्यां तां; Da °ख्यां. — d) Ś1 K1 °मोचिनीं; Ñ1.3 B1.3.4 D2 °मोच°; a few MSS. °णाश°.

10 b) T2 G (except G1.3) transp. पूरुं and पुत्रं. — c) = 1c. Ś1 K1 ततो (for राज्ये). — d) Ś1 पुनराजा (sic) and गतः (*sup. lin.* प्रव° and तदा as in text).

11 a) Ś1 K3 Ñ B1.4.5 Dn D4 G3 M3.5 अंत्येषु; B3 Da अन्येषु; D5 म्लेच्छेषु; Cd as in text. Ś1 K1.3.4 B5.6 च; T2 G (except G1.3) अथ (for स). D1 ²अमात्येषु वि°. — b) S पुत्रान्वै पूरुपूर्वजान्. — d) K1–3 B1 Dn2.n3 D4 T G5.6 M6–8 स न्य°.

12 a) K3.4 Ñ1.2 B3.4 Dn D1.4.5 शंसितात्मा; Ñ3 संश्रि°; T2 G (except G3) संयता°. — c) T G (except G3.4) अग्निं च. K1 हुत्वा; K3 B (except B3) Da1 जुह्वद्.

13 a) B1.4 D2 अतिथिं. Ś1 K Ñ3 Da D5 पूजयन्नित्यं. — b) S द्विजान् (for विभुः). — c) T1 G1.3 आसाद्य; T2 G4–6 °दाय; G2 °नाय. — d) M6–8 शेषान्ने.

14 a) K1 G1 पूर्णे. Ś1 K0–3 सहस्रं वर्षाणाम्; K4 D5

C. 1. 3548
B. 1. 86. 15
K. 1. 80. 16

अब्भक्षः शरदस्त्रिंशदासीन्नियतवाङ्मनाः ॥ १४
ततश्च वायुभक्षोऽभूत्संवत्सरमतन्द्रितः ।
पञ्चाग्निमध्ये च तपस्तेपे संवत्सरं नृपः ॥ १५
एकपादस्थितश्चासीत्षण्मासाननिलाशनः ।
पुण्यकीर्तिस्ततः स्वर्गं जगामावृत्य रोदसी ॥ १६

इति श्रीमहाभारते आदिपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

## ८२

वैशंपायन उवाच ।
स्वर्गतः स तु राजेन्द्रो निवसन्देवसद्मनि ।
पूजितस्त्रिदशैः साध्यैर्मरुद्भिर्वसुभिस्तथा ॥ १
देवलोकाद्ब्रह्मलोकं संचरन्पुण्यकृद्वशी ।
अवसत्पृथिवीपालो दीर्घकालमिति श्रुतिः ॥ २
स कदाचिन्नृपश्रेष्ठो ययातिः शक्रमागमत् ।
कथान्ते तत्र शक्रेण पृष्टः स पृथिवीपतिः ॥ ३
शक्र उवाच ।
यदा स पूरुस्तव रूपेण राज-
ञ्जरां गृहीत्वा प्रचचार भूमौ ।

T G वर्षसहस्राणाम्. Ñ Dn च; Da तु (for स). — $^{c}$) K2 T1 G1 M5 अभक्षः. T2 G6 शरदां; G2-5 च ततस्. — $^{d}$) Da नियतसंयमः; D5 °मानसः.

15 $^{c}$) S (except T2 G6) पुनः (for तपः). Ñ1.2 B D (except Da D5) तथा (B5 ततः) पंचाग्निमध्ये च (D2 तु). — $^{d}$) K3 D5 नृप; Ñ3 T2 G3.6 पुनः; G1 ततः; G2.4.5 तपः; M मुनिः (for नृपः). Ñ1.2 B Dn D1.2.4 तपस्तेपे स वत्सरं.

16 $^{a}$) Ś1 K1 Ñ B3 Dn2 D4.5 G3 °पादः. T2 G2.4.6 °श्चापि. — $^{b}$) T1 G1.3 षण्मासं च. T2 G4-6 अभवत्तदा; M नियतव्रतः. — After 16$^{ab}$, D4 (marg.) S ins.:

853* एवमेव तथाब्दानां पर्यायेण गतं तदा ।

— $^{c}$) S महायोगी (for पुण्य°). T2 G गतः. Dn स्वर्गे. — $^{d}$) D2 व्याप्य; G6 प्रेत्य; Cd आवृत्य (as in text). K (except K1) रोदसीं; Cd as in text.

Colophon. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 T1 संभव; to it Ñ1.2 add उत्तरयायात. Ś1 Ko-2 Ñ3 B Da Dn D1.4.5 T2 G4 M3.5 (om. the sub-parvan name) mention only उत्तरयायात. — *Adhy. name:* K3 ययातिस्वर्गगमनं; K4 ययातितपश्चर्या; T2 G4 तपश्चर्या. — *Adhy. no.* (figures, words or both): Ś1 96; Ko 83; B5 80; Da1 D4 m 84; Dn3 85; D5 81; T1 71; T2 21; G M 22. — *S'loka no.:* Ñ3 M3 19; Da1 Dn 17. — *Aggregate s'loka no.:* Dn2 3523.

### 82

☞ This adhy. is missing in V1 (cf. v. l. 1. 68. 74); the MS. is *wholly* ignored here.

1 Ś1 K1.3 D5 S om. उवाच. — $^{a}$) Ko.3.4 Ñ3 तु स (by transp.); T1 चाथ; G1.3 स च. D5 राजर्षिः. — $^{b}$) Ko.2 B1m Da न्यवसद्. Ñ1 B3.4.6 D (except Da D5) S °वेश्मनि; Ñ3 °संनिधौ. — $^{c}$) Ñ1 सर्वैर्; B5 साधैं (for साध्यैर्). — $^{d}$) Ś1 K1 B4 G1.3 M3.5 तदा; B5 सदा.

2 $^{a}$) Dn D1.4 देवलोकं. T1 G2.4.5 पुण्य-; T2 पुनर् (for ब्रह्म-). — $^{b}$) Ko संसरत्; K3 शशंस; K4 संस्मरन्. Ś1 K1 बली (for वशी). — After 2$^{ab}$, T G (except G3) ins.:

854* पूजितस्त्रिदशैः साध्यैर्ययातिरतिधार्मिकः ।

— $^{d}$) Da स्मृतिः; D5 श्रुतं; T G4-6 श्रुतः.

3 $^{a}$) Ś1 transp. स and कदाचित्. — $^{b}$) Ś1 K1 °मासदत्; G6 °मागतः. — After 3$^{ab}$, M6-8 ins.:

855* कथयित्वा कथास्तात शक्रेण सह पौरवः ।

— In Ś1, 3$^{cd}$-4$^{ab}$ (up to गृहीत्वा) is lost on a broken upper portion of a fol. (63). — $^{d}$) Dn D1.4.5 transp. पृष्टः and स.

4 K1 om. उवाच. S (T2 om.) इंद्रः (for शक्र उ°). — $^{a}$) T1 G5 यथा. Ko G1.2.5 om. स. — $^{b}$) Ko च; K4 अथ; S वि- (for प्र-). — K1 om. 4$^{c}$-5$^{c}$. — $^{c}$) Ñ1.2 B (except B5) D (except Da D5) तदा च राज्यं.

तदा राज्यं संप्रदायैव तस्मै
　त्वया किमुक्तः कथयेह सत्यम् ॥ ४

ययातिरुवाच ।

गङ्गायमुनयोर्मध्ये कृत्स्नोऽयं विषयस्तव ।
मध्ये पृथिव्यास्त्वं राजा भ्रातरोऽन्त्याधिपास्तव ॥५

अक्रोधनः क्रोधनेभ्यो विशिष्ट-
　स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषेभ्यो मानुषाश्च प्रधाना
　विद्वांस्तथैवाविदुषः प्रधानः ॥ ६

आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ ७

नारुंतुदः स्यान्न नृशंसवादी
　न हीनतः परमभ्याददीत ।
ययास्य वाचा पर उद्विजेत
　न तां वदेद्रुशतीं पापलोक्याम् ॥ ८

अरुंतुदं पुरुषं रूक्षवाचं
　वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।
विद्यादलक्ष्मीकतमं जनानां
　मुखे निबद्धां निर्ऋतिं वहन्तम् ॥ ९

सद्भिः पुरस्तादभिपूजितः स्या-
　त्सद्भिस्तथा पृष्ठतो रक्षितः स्यात् ।
सदासतामतिवादांस्तितिक्षे-
　त्सतां वृत्तं चाददीतार्यवृत्तः ॥ १०　C. 1. 3560 B. 1. 87. 10 K. 1. 81. 18

---

— $^{d}$) K0 D1 किमुक्तं. Ñ3 कथयस्व राजन्.

5 K1 om. $5^{abc}$ (cf. v. l. 4). — Ś1 S om. उवाच. — G2 om. $5^{cd}$. — $^{d}$) Ś1 illegible; K0.2 D5 °रोंतेधि°; K1 भ्राततो (sic) नाधिप°; K4 D2 °रोंते नृ°; S (G2 om.) °रोंताधि°. — D4 (marg.; om. lines 14–15) S ins. after 5 (G2, after $5^{ab}$):

856* न च कुर्यान्नरो दैन्यं शाठ्यं क्रोधं तथैव च ।
जैह्मयं च मत्सरं वैरं सर्वत्रैतन्न कारयेत् ।
मातरं पितरं चैव विद्वांसं च तपोधनम् ।
क्षमावन्तं च देवेन्द्र नावमन्येत बुद्धिमान् ।
शक्तस्तु क्षमते नित्यमशक्तः क्रोशते नरः ।
दुर्जनः सज्जनं द्वेष्टि दुर्बलो बलवत्तरम् ।
रूपवन्तमरूपी च धनवन्तं च निर्धनः ।
अकर्मी कर्मिणं द्वेष्टि धार्मिकं चाप्यधार्मिकः ।
निर्गुणो गुणवन्तं च शक्रैतत्कलिलक्षणम् ।
विपरीतं च देवेन्द्र एतेषु कृतलक्षणम् ।
ब्राह्मणो वाथ राजा वा वैश्यो वा शूद्र एव वा ।
प्रशस्तेषु प्रशस्तारः प्रशस्यन्ते यशस्विनः ।
तस्मात्प्रशस्ते देवेन्द्र नरः सक्तमना भवेत् ।
अलोकज्ञा ह्यप्रशस्ता भ्रातरस्ते ह्यबुद्धयः ।
अन्ताधिपतयः सर्वे ह्यभवन्मम शासनात् ।
इन्द्रः ।
त्वं हि वै धर्मदो राजन्कथ्यसे धर्ममुत्तमम् ।
कथयस्व पुनर्मेऽद्य लोकवृत्तान्तमुत्तमम् ।

[ (L. 1, 3) D4 नृपो (for नरो) and ज्येष्ठं (for चैव). — (L. 4) T1 G1–3 राजेंद्र (for देवें°). — (L. 6) T2 G4–6 M सुजनं (for सज्ज°). — (L. 7) D4 तपस्विनं चातपस्वी; M रूपस्विनमरूपस्वी. — (L. 8) D4 T2 G1.3.6 च न (for चाप्य-). — (L. 10) T G राजेंद्र. — (L. 12) T G3–6 प्रसक्ताश्चेत् (for प्रशस्तारः). D4 प्रशस्तृभिः; M6–8 प्रशस्तिभिः (for यश°). — (L. 13) G1–3 राजेंद्र. ]

6 $^{b}$) K4 वरिष्ठः (for विशि°). — $^{c}$) T2 G4.5 असमानुषा मानुषेभ्यः प्र°. — $^{d}$) K3 विशिष्टः; K4 [ऽ] वशिष्ठः; D2 पुराणः; G3 M5 प्रधानाः.

7 $^{a}$) Ś1 नाक्रुश्ये; K1 नाक्रचे (for नाक्रो°). — $^{d}$) D2 सुकृतिं. G3 चैव.

8 Cf. Manu 2. 161 (s'loka!). — $^{b}$) K3 °दधीत. G3 न हिंसकः परमर्मादवीतः (sic). — $^{c}$) G1–3 पुनरुद्विजेत. — $^{d}$) Ś1 K1 D2 Arjp Nilp °द्रुषतीं; Ñ2.3 B Dn D1 °दुष°; Da D4.5 °दुश°; Cd as in text. Ñ1 न तां वदेद्दोषवतीमधर्म्यां.

9 $^{a}$) After °तुदं, Ñ1 B D2 ins. वै. K (except K2) Ñ2.3 D (except D2.4.5) T G3.4 M (except M3) परुषं. B6 °षस्य तीक्ष्णं. K0.3.4 Ñ2 B1m.3 Da Dn D1.4 तीक्ष्णवाचं; Ñ1 B4.5 D2 तु तीक्ष्णं; B1 (orig.) सुतीक्ष्णं. — $^{b}$) Ś1 K1 G (except G1.3) मनुष्यं. — $^{c}$) K2 नराणां (for जना°). S क्षिप्रं ह्यलक्ष्मीर्भजते मनुष्यं (T2 G2.4–6 नरं तं). — $^{d}$) K0 S निकृतिं; Cd as in text. Ś1 महांतम्; M6–8 वदंतं.

10 $^{a}$) K1 B5 D5 अति-; Ñ1 B3 G6 अथ; Da1 G5 अपि (for अभि-). — $^{b}$) S (except G3) सदा (for तथा). T2 G (except G1.3) transp. पृष्ठ° and रक्षि°. — $^{d}$) T2 G1.6 आर्यवृत्तिः.

11 Cf. v. l. 1. 74. 12. — $^{b}$) Ś1 K1 यैराचितः.

